अहल्यादर्शनं चैव गौतमेन समागमम् ।
महाधनुषि जिज्ञासां कर्तुमागमनं तथा ॥ २४

एतत्सर्वं महातेजा जनकाय महात्मने ।
निवेद्य विररामाथ विश्वामित्रो महामुनिः ॥ २५   G 1 51 23 B 1 50 25 L 1 46 22

इति श्रीरामायणे बालकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

$N_3$ V B $D_{1,2,3,10,13}$ $M_4$ द्वि( $V_{1,2}$ $B_1$ $M_4$ वै )शालस्य (for विशालायाम्) $D_{13}$ स (sic) (for च)

24 $^b$) $G_1$ गौतमे तु (for गौतमेन) —$^c$) $G_{2,3}$ $M_1$ आरोपण $M_4$ चा°, Ct as in text (for आगमनं) $T_3$ तदा (for तथा) —For 24 Ś1 $D_{1-3,5,7,11}$ (l 2 only for $24^{cd}$) 11 subst

1042* गौतमाश्रमकार्यं च गौतमस्य च दर्शनम् ।
महाधनुषि जिज्ञासा कार्यं चैषा महात्मन ॥

[$D_{13}$ om (hapl) l 1 —(l 1) $D_{12}$ गौतमस्य (through eye wandering for गौतमा) —$D_3$ om l 2 —(l 2) $D_{1,2}$ कार्यं चैत महात्मनो $D_{11}$ कर्तव्या च महायशा (for the post half) ]

while $N_3$ V B $D_{10}$ 11(l 1 only for $24^{ab}$) 12 subst

1043* गौतमस्य च शापान्तमहल्यायाश्च दर्शनम् ।
रामस्य धनुषश्चैव जिज्ञासार्थमुपागमम् ।

[$D_{12}$ om (hapl) l 1 —(l 1) $B_3$ transp the two halves $V_1$ $B_{2,4}$ गोतमस्य $N_3$ $B_3$ $D_{10}$ (श्र)पि (for first च) $D_{11}$ (with hiatus) शापाच (for शापान्तम्) $D_{12}$ अहिल्यायाश् —(l 2) $V_3$ रामश्च $V_{2,3}$ उपागमत् ( $V_3$ °न ) $B_{2-4}$ ( $B_1$ m also) ज्यागत ]

25 $^a$) Ñ2 V B $D_{10,12}$ इति, Ck as in text (for एतत्) $D_3$ सर्वे, Ck as in text (for सर्वं) —$^b$) $V_3$ न्यवेदयत्, $B_3$ (m also as in text) °मुने (for महात्मने) Ś1 $D_{1,2,5,7,11,12}$ कौशिको जनकाय वै —$^c$) Ś1 $D_{2,5,7,12}$ विररामाशु, $V_3$ वीर रामार्थं (sic) Ctp विरराम तदा (hypermetric) (for विररामाथ) —$^d$) $D_{11}$ महातपा —After 25 Ś1 $D_{1,5,7,11,12}$ ins

1044* मुनिमध्ये स्थितः प्राज्ञो वसूनामिव पावक ।
[$D_{1,7,11}$ यज्ञे (for प्राज्ञो) ]

Colophon $D_{1,2,5,11,12}$ om (cont the Sarga) —*Kanda name* Ś1 $N_2$ $V_1$ $D_4$ om $V_{2-4}$ B $D_{10}$ आदि° —After Kanda name $B_4$ ins बालचरिते —*Sarga name* Ñ2 V B $D_{3,10}$ जनकदर्शन( $B_1$ °कसमागम $D_3$ °संवादो ) —*Sarga no* (figures words or both) $V_{1,4}$ $B_{1,4}$ om Ś1 (m) $V_2$ Dt $D_{4,6,14}$ T G $M_{1,2}$ 50 Ñ2 $B_{2,3}$ $D_{10}$ 51 $V_3$ $D_3$ 53 $D_{13}$ इत्यार्षे—यथ—काडे—दर्शनसर्गो 51 —After colophon $G_{1,2,4}$ $M_3$ conclude with श्रीरामाय नम $G_3$ श्रीमते रामानुजाय नम

# ५०

G. 1. 52 1 B. 1. 51 1 L. 1. 47 1 तस्य तद्वचनं श्रुत्वा विश्वामित्रस्य धीमतः ।
हृष्टरोमा महातेजाः शतानन्दो महातपाः ॥ १
गौतमस्य सुतो ज्येष्ठस्तपसा द्योतितप्रभः ।
रामसंदर्शनादेव परं विस्मयमागतः ॥ २
स तौ निषण्णौ संप्रेक्ष्य सुखासीनौ नृपात्मजौ ।
शतानन्दो मुनिश्रेष्ठं विश्वामित्रमथाब्रवीत् ॥ ३
अपि ते मुनिशार्दूल मम माता यशस्विनी ।
दर्शिता राजपुत्राय तपो दीर्घमुपागता ॥ ४
अपि रामे महातेजो मम माता यशस्विनी ।
वन्यैरुपाहरत्पूजां पूजार्हे सर्वदेहिनाम् ॥ ५
अपि रामाय कथितं यथावृत्तं पुरातनम् ।
मम मातुर्महातेजो दैवेन दुरनुष्ठितम् ॥ ६
अपि कौशिक भद्रं ते गुरुणा मम संगता ।
माता मम मुनिश्रेष्ठ रामसंदर्शनादितः ॥ ७
अपि मे गुरुणा रामः पूजितः कुशिकात्मज ।
इहागतो महातेजाः पूजां प्राप्य महात्मनः ॥ ८

## 50

☞ Ñ1 missing Sarga 50 (cf v l 1338) D1 3 5 7 11 12 continue the previous Sarga.

1 c) D1 2 हृष्टचेता Ñ2 V B D10 12 श्रुत्वं भूत्वा (for महातेजा) —d) B1 महामुनि, Ś1 (after corr sm as in text) D1–3 5 7 11 12 क्षणेन समपद्यत

2 a) V1 B1 D1 गोतमस्य, D2 गौतमेन (sic) V1 (after corr marg as in text) T1 श्रेष्ठस्, T2 ज्येष्ठं (sic) (for ज्येष्ठस्) —T3 om (hapl ?) Ñ2 reads in marg 2b–3a —b) V1 2 4 B3 D1 M4 [उ]द्योतितप्रभ, B4 D12 13 द्योतित प्रभु —c) G1 रामस्य (for रामस) Ś1 Ñ2 V B D1–3 5 7 10–12 रामस(D2 3 7 °स्य)दर्शनं प्राप्य(D3 7 °स) —d) M4 आययौ (for आगत) Ñ2 V B D10 12 विस्मय परम ययौ, Cv r k as in text

3 T3 om Ñ2 reads in marg up to 3a (for both cf v l 2) —a) D1 D4 6 पुत्री, G1 3 M3 (after corr sec m as in text) ततो, Cm as in text (for स तौ) G4 निपण्ण Ś1 D1 2 11 12 स (Ś1 सु, D1 स) निषण्णौ तु तौ (D11 ततो) दृष्ट्वा, Ñ2 V B D3 7 10 12 स (Ñ2 V1 3 4 B1 2 4 D10 स) निषण्णावुभौ दृष्ट्वा D6 स सनिषण्णौ तौ दृष्ट्वा, M4 स निषण्णस्ततो दृष्ट्वा —bc) D1 सुखासीनो D6 8 transp सुखासीनौ and शतानन्दो Ñ2 V B D10 12 सहितौ रामलक्ष्मणौ (for b) Ś1 V1 B1 D1 3 5 7 11 12 मुनिश्रेष्ठो, M4 द्विजश्रेष्ठ —d) Ś1 Ñ2 V B D10 12 अभाषत, D1 3 5 7 11 12 उवाच ह (for अथाब्रवीद्)

4 a) G3 M1 ह्य, Cm g t as in text (for ते) Ñ2 V B D10 12 अपि(V2 °पि) त्वया मुनिश्रेष्ठ M4 अपि त्वया महाभाग, Ck as in text —b) Ś1 Ñ2 V B2–4 D1–3 5 7 10–12 तपस्विनी —cd) Cg as in text (for c) M4 दीर्घं तप (by transp) Ñ2 V B D10 12 दृष्टा राजपुत्रस्य रामस्यास्य(D10 °श्रस्य, D12 °स्य च) महात्मन

5 D6 12 om (hapl) 5 Ś1 D3 om 5ab —a) D1 D4 (before corr as in text) 6 8 T G1 °तेजा, G2–3 M3 °भागा, M4 °भागे (for महातेजो) —Ś1 reads 5c–6 in marg —d) Ś1 रघुनंदन (for सर्वदेहिनाम्) —For 5, Ñ2 V B D10 12 subst

1045* अपि रामाय मे माता पूजार्हाय महात्मने ।
पूजा कृतवती सम्यगहल्या भृशदु खिता ॥

[(1 1) B3 4 D10 12 महामुने —D12 om (hapl) from 1 2 up to 6d ]

On the other hand D1–3 7 11 subst

1046* अपि रामो महातेजा मम माता सह त्वया ।
वन्यैर्मूलफलैर्नूनमर्चितोऽर्घ्यप्रतिग्रहै ॥

[(1 1) D11 महात्मने (for सह त्वया) —(1 2) D3 मूलै, D11 भूमि (for मूल) D3 अर्चिते (for अर्चितो) D11 हि भरि° (for र्घ्यप्रतिग्रहै) ]

6 D12 om 6ab, Ś1 reads 6 in marg (for both cf v l 5) —b) B3 reads यथा in marg D1 D3 8 यद्वृत्त वत्(D1 यद्) (for यथावृत्त) —c) D3 5 7 अपि (for मम) Ñ2 V B1–3 D10 12 M4 °बुद्धे, B4 °भाग, D1–3 7 °वीर्य, T1 °तेजा (for महातेजो) —d) Ñ2 V1 3 4 B4 D2 3 7 10 12 T2 Cm g दैवेन, Ck t दै° (as in text) V1 B1 2 D1–3 5 7 °धिष्ठित, B3 दु खचेष्टित, D4 M3 Cm यद्दु°, Cg k t दुरनुष्ठित (as in text) T3 दैवेय च(च य)दनुष्ठित —For 6, D5 11 12 subst, Ś1 D1–3 7 ins after 6

1047* अपि मत्ता विमु(Ś1 °मु)क्ता मे तस्माच्छापात्सुदारुणात् ।

7 ab) Ś1 अपि (for अपि) Ś1 (after corr sup lin as in text) D6 12 13 चापि (for मम) Ñ2 V B D10 12 M4 अपि कौशिक माता मे संगता गु(V4 °त(त)रुणा तुन (V4 मम, B1 सह) —c) D1 D6 8 14 T1 2 M3 मम माता (by transp) Ś1 D1–3 5 7 11 12 माता मुनिगणश्रेष्ठ, Ñ2 V B D10 12 M4 शापादिद्ध्या निता(M4 माता) मे —d) Ś1 D6 12 अद्य, M3 पर, Ck as in text (for इत) Ñ2 V B D10 11 12 T3 M4 रामदर्शननिर्मला(T3 °नादित), Cg t as in text

8 Ñ2 V B D10 11 12 M4 transp 8 and 9 —c) Ś1 Ñ2 V B D1 3 5 7 10–12 नगरं, Ck t as in text (for

अपि शान्तेन मनसा गुरुर्मे कुशिकात्मज ।
इहागतेन रामेण प्रयतेनाभिवादितः ॥ ९
तच्छ्रुत्वा वचनं तस्य विश्वामित्रो महामुनिः ।
प्रत्युवाच शतानन्दं वाक्यज्ञो वाक्यकोविदम् ॥ १०
नातिक्रान्तं मुनिश्रेष्ठ यत्कर्तव्यं कृतं मया ।
संगता मुनिना पत्नी भार्गवेणेव रेणुका ॥ ११
तच्छ्रुत्वा वचनं तस्य विश्वामित्रस्य धीमतः ।
शतानन्दो महातेजा रामं वचनमब्रवीत् ॥ १२
स्वागतं ते नरश्रेष्ठ दिष्ट्या प्राप्तोऽसि राघव ।
विश्वामित्रं पुरस्कृत्य महर्षिमपराजितम् ॥ १३
अचिन्त्यकर्मा तपसा ब्रह्मर्षिरमितप्रभः ।
विश्वामित्रो महातेजा वेत्स्येनं परमां गतिम् ॥ १४
नास्ति धन्यतरो राम त्वत्तोऽन्यो भुवि कश्चन ।
गोप्ता कुशिकपुत्रस्ते येन तप्तं महत्तपः ॥ १५
श्रूयतां चाभिधास्यामि कौशिकस्य महात्मनः ।
यथाबलं यथावृत्तं तन्मे निगदतः शृणु ॥ १६     G 1 52 16 B 1 51 16 L 1 47 16

---

राम ) —b) Ś1 Ñ2 V B D1-3 5 7 10 13 पूजितोसि यथार्हत (Ś1 D5 12 °र्हेण, D3 °र्हत ) —c) D1-3 7 13 °भाग, D11 महा ** (for महातेजा ) —d) Ś1 D5 12 कृत्वा (for प्राप्य) D1 यथाविधि (for महामन )

9 Ñ2 V B D10 11 13 M4 transp 8 and 9 Ś1 D5 6 12 om (hapl ?) 9 —a) Ñ2 V B D10 11 13 M4 प्रीतेन (for शान्तेन) —D7 om 9cd —cd) D1 D6 8 पूजितेन, T2 Ck प्रयत्नेन, Cg as in text (for प्रयतेन) Ñ2 V B D10 11 13 M4 पू(M4 प्)ता वार्धेण तपसा मातर मेभ्यनन्दत (Ñ2 B2 °यत), D1 3 इहागतो महातेजा पूजा कृत्वा महामन (cf 8cd)

10 Ś1 M3 read 10–11 in marg —a) D13 त(sic) (for तच्) —b) Ñ2 V B D1 3 7 10 11 महायशा, D14 महातपा D5 12 शतानन्दस्य धीमत —c) V3 इत्युवाच —d) D3 sup lin G1 3 वाक्यज्ञ, M3 damaged वा (for वाक्यज्ञो) D3 –विद्, D12 G1 2 M4 –कोविद (for –कोविदम्) Ñ2 V B (B3 inf lin also) D10 11 13 वाक्यं वाक्यविशारद (Ñ2 B2 D10 °दा वर )

11 Ś1 M3 read 11 in marg (cf v l 10) —a) D6 13 नातिक्रमो Ñ2 V B D10 13 इद महत् (for मुनिश्रेष्ठ) —b) Ñ2 V B1 3 4 D10 13 यत्कार्यं तत्, B2 कार्यं यत्तत्, D1-3 5 7 11 12 M4 सर्वमेतन्, Cg k t as in text (for यत्कर्तव्य) D1-3 6 7 11 13 M4 transp कृत and मया —c) Ñ2 V B D10 13 गुरुणा (for मुनिना) —d) V3 B3 4 D6 10 [गु]व (for [ग]व) D1-3 5 7 11 12 रेणुकेव महात्मना

12 b) D6 14 T G M3 Cm भाषित (for धीमत ) —c) Ñ2 V1-3 B D10 13 M3 °नन्दस्ततो राम, V4 °स्ततो वाक्यं —d) Ñ2 V1 3 B D3 7 10 12 M4 (all except D3 7 with hiatus) इदं (for राम) V4 वचन मिदमब्रवीत्

13 a) Ñ2 V B D10 11 13 M4 रघुश्रेष्ठ, D7 मुनिश्रेष्ठ —b) V3 दृष्ट्या Ś1 D5 11 13 दृष्टोसि (D11 °*) B1 प्राप्तोसि (sic) Ñ2 V B D10 13 मे प्राप्तो, M4 च प्राप्तो (for राघव) —d) D8 महर्षिम् (for महर्षिम्) Cm k अपराजित (as in text) Ś1 D1 3 4 7 12 त पा(D2 3 7 स्वा)श्रममुपागत D3 स्वाश्रम समुपागत, D11 (with hiatus) इम यज्ञमुपागत —For 13cd, Ñ2 V B D10 13 M4 subst

1048* विश्वामित्रेण सहित इम यज्ञ महात्मन ।

[ V3 4 इद (for इम) D14 यज्ञार्थ महात्मना (for the post half) ]

14 a) G1 तपस, Cm g as in text Ś1 Ñ2 V B D1 3 5 7 10-13 अचिन्त्यो ह्यप(D13 ह्यसि) धर्मात्मा, D6 (before corr as in text) अचिन्त्यकर्मतपसा, M4 अचिन्त्यधर्म कर्माय —b) Ś1 D1-3 5 7 11 13 G1 2 M3 महर्षिर्, Cm g ब्रह्मर्षिर् (as in text) D1 9 T2 G1 2 M महत्क (for अमित ) Ñ2 V B1 2 4 D10 शार्दूलसमित(B4 °मह)द्युति, B3 D13 रामेव(D13 °म त्व)ममितद्युति —c) G2 M3 महाभाग —d) Dt D1 6 8 T2 वेत्सि, Cg as in text (for वेत्स्ि) Ct परमां गतिं (as in text) Ś1 D1 3 5 7 8 12 तवाय परमा गति, Ñ2 V B1 3 4 D10 13 M4 यस्य(V1 °स्य) ते परमो गुरु, B2 ऋषीणां परमो गुरु, D11 तवाय परमो गुरु

15 a) V3 धर्मरतो (for धन्यतरो) —b) Ś1 D5 12 M4 त्वयेह, Ñ2 V B D10 11 13 त्वदन्यो, D1 3 7 सखेह (for त्वत्तोऽन्यो) Ś1 D5 12 यस्य ते, D1 पाश्र्वे (gloss एतस्मा द्विश्वामित्रान्न्य कोपि धन्यतरो नास्ति यस्मात्त्वया पाश्र्वत अधीयत त्वा अस्त्रग्राम कथापयिनु विश्वामित्र एवार्हति नान्य ), D2 3 7 इहपत (for कश्चन) —c) D3 कौशिक° D1 2 5 12 तु (for ते) D11 यस्माचे हितकामोथ —d) D11 तेन (for येन) Dt M3 महातप —For 15cd, Ñ2 V B D10 13 M4 subst

1049* गुणेन तेजसा चापि धर्मेण च पराक्रमै ।
यस्य ते हितकामोऽय विश्वामित्रस्तपोनिधि ।

[All except B3 om 1 2 —(l 2) B1 om ते (submetric) ]

16 a) V1 damaged Dt श्रूयतां Ś1 D1 3 5 11 12 अभि°, Ñ2 V3-4 B D10 13 च पुरा(B4 यथा)वृत्त, D7 अप° (sic), M1 त्वभिधास्यामि —c) D11 °चामी M3 °कुल (for यथाबलं) Dt D1 8 Ct °तत्वं, D7 °बिल (sic) (for यथावृत्त) Cv r as in text Cm g k t no समस्तपदs (for c) —For 16cd Ñ2 V B D10 13 subst while D11 ins. after 16ab

1050* यद्वीर्यं यत्प्रभावोऽय यद्योगश्च महायशा ।

G 1 52 17 B 1 51 17 L 1 47 17

राजाभूदेष धर्मात्मा दीर्घकालमरिंदमः ।
धर्मज्ञः कृतविद्यश्च प्रजानां च हिते रतः ॥ १७
प्रजापतिसुतस्त्वासीत्कुशो नाम महीपतिः ।
कुशस्य पुत्रो बलवान्कुशनाभः सुधार्मिकः ॥ १८
कुशनाभसुतस्त्वासीद्गाधिरित्येव विश्रुतः ।
गाधेः पुत्रो महातेजा विश्वामित्रो महामुनिः ॥ १९
विश्वामित्रो महातेजाः पालयामास मेदिनीम् ।
बहुवर्षसहस्राणि राजा राज्यमकारयत् ॥ २०
कदाचित्तु महातेजा योजयित्वा वरूथिनीम् ।
अक्षौहिणीपरिवृतः परिचक्राम मेदिनीम् ॥ २१
नगराणि च राष्ट्राणि सरितश्च तथा गिरीन् ।
आश्रमान्क्रमशो राजा विचरन्नाजगाम ह ॥ २२
वसिष्ठस्याश्रमपदं नानापुष्पफलद्रुमम् ।
नानामृगगणाकीर्णं सिद्धचारणसेवितम् ॥ २३

---

[ D3 यशोव्यग्र, D13 यद्विचग्र (for यशोगग्र) V4 महातपा (for महायशा) ]

17 a) Dt D4.5 [आ]सीद्; Ck as in text (for [अ]भूद्) —b) V B1 3 4 D2.3 5 6 M3 अरिंदम —B2 repeats (m) 17cd after 20 —c) G1 3 कृतज्ञ; G2 M1 सर्वज्ञ (for धर्मज्ञ) Ś1 D1 3 5 7 12 13 M4 च वदान्यश्च; Ñ2 V2-4 B1 3 (B2 both times) D10 12 च क्रियावांश्च, B4 D6 च कृतज्ञश्च, T2 3 °वीर्यश्च (for कृतविद्यश्च) V1 धर्मपञ्च (sic) क्रियावांश्च —d) D1-3 5 12 प्रजास्वपि (for प्रजानां) Ñ2 V B (B2 both times) D10 12 पालने (for च हिते) D11 सर्वभूतहिते रत

18 a) Ś1 Ñ2 V B D1-3 5 7 10-13 M4 पितामह, Cg k t as in text (for प्रजापति) Ñ2 V1 2 B3 D6-4 7 11 13 T3 G1 2 M3 च (for तु) —b) Ś1 Ñ2 V1 (before corr as in text) 2 4 B1 2 D1 3 5 7 10-13 महातपा (D2 (before corr) °त्मन), B3 4 महायशा (for मही°) —c) V1 मम्च न (for बलवान्) —d) D13 om (hapl) from कु up to भ in 19a D12 तु (for कु)

19 D12 om up to भ (cf v l 18) T3 reads 19-20 in marg —a) Ñ2 V1 2 P3 D1 2 7 10 13 T2 G1 3 M3 चासीद्, D6 तस्मात्, D13 चामी (sic) M3 श्रीमान् (for त्वासीद्) —b) M1 3 (sup lin sec m before corr as in text) गाधिर् D1 [अ]भि, D2 3 5 7 11 13 [प्]य (for [प्]व) —c) Ñ2 V B D10 12 तस्य, D11 गाधि (for गाधे) —Ñ2 om (hapl) from तेजा up to महा in d —B1 om (hapl) 19d —d) D1-3 7 11 महायशा, D5 12 महामना

20 T3 reads 20 in marg (cf v l 19) —ab) M4 °मित्रस्तु धर्मात्मा T3 धर्मेण स महाबाहु (for a) Cg पालयामास (as in text) Ś1 Ñ2 V B D1 3 5 7 11 13 विश्वामित्रस्तु (D13 °श्र) धर्मात्मा पालयन्मेदिनी (Ś1 °न्पृथिवी) मिमा —c) Cv r बहुवर्षं (as in text) Ś1 D1 3 5 7 11 13 बहून्वर्षगणाञ्राम, Ñ2 V B D10 12 वर्षायुतान्यनेकानि —After 20c M3 (inf lin sec m) ins

1051* चतुरङ्गबलैर्युत ।
नीतिशास्त्रविशेषज्ञ प्रह्मण्य सत्यसंगर ।
निग्रहानुग्रहपरो

—After 20 B2 (marg) repeats 17cd and then ins

1052* पूर्वं पालयतो राम राज्यस्य महात्मन ।
अष्टौ रजर्षिरे पुत्रा ख्यातवीर्यपराक्रमा ।
तान्सर्वांस्तप्रथितान्प्रतिष्ठाप्याशु वीर्यवान् ।
हृष्टा पश्चाते पुण्यैस्तपोवनमुपागत ।

21 a) Ś1 Ñ2 V1-3 B D10 13 स, D3 5 7 11 13 सु (for तु) M4 महासेनां —b) Ñ2 V1 2 4 B D1 3 7 9 11 12-14 T1 2 G1 M4 Cvp वरूथिनीं (D1 gloss करितुरगरथमन्त्रि भारगार), Cg k t as in text (for वरूथिनीम्) V विश्वामित्रो महामुनि —M1 reads 21cd inf lin sec m —c) G1 2 M2 अक्षौहिण्या (for °हिणी) —d) Ś1 D3 पर्यगच्छद्वसुंधरां, D1-3 7 11 पर्यटश्च वसुधरां

22 a) D11 T3 G M1 स (for च) —b) Dt D4 5 सह (for तथा) —For 22ab, Ś1 Ñ2 V B D1 3 5 7 10-13 M4 subst

1053* सरित पर्वतांश्चैव वनानि नगराणि च ।

[ V1 सर्वतश् (for पर्वतांश्) D4.5 नागनानि वनानि च M वनान्युपवनानि च (for the post half) ]

—D11 om 22c-23b —c) Ś1 Ñ2 V1-3 B D1-3 5 7 10 12 M4 विचरन्, V4 विक्रमन्, D13 विवल (sic) (for आश्रमान्) M3 विचरन् (for क्रमशो) T1 2 M3-4 राम, G1 M1 राजन् (for राजा) —d) Ś1 D1 3 4 7 9 12 स (D13 *) दृगतच्छन्महायशा, Ñ2 V B D10 12 (all with hiatus) आजगाम महायशा (B1 °बल) M3 क्रमशस्त्वाजगाम ह; M4 राजमानो महायशा

23 V3 D11 om 23ab (for D11 cf v l 22) —b) Dt D4 5 T G1 -रता (for फल) V1 नानाद्रुमलतायुत, B4 महास्थानमनुत्तमं, D12 T1 2 G1 नानाद्रुमलताकुले —c) V1 मृगशता°, V2 द्रुमलता°, V3 -मृगगणै°, B4 -मृगसमा° (for -मृगगणाकीर्णं) —d) Ś1 D1-3 5 7 11 13 देवर्षिगण (for सिद्धचारण) Ś1 D5 13 -पूजित —After 23 Ś1 D1 3 5 7 11 13 M4 ins

देवदानवगन्धर्वैः किंनरैरुपशोभितम् ।
प्रशान्तहरिणाकीर्णं द्विजसंघनिषेवितम् ॥ २४
ब्रह्मर्षिगणसंकीर्णं देवर्षिगणसेवितम् ।
तपश्चरणसंसिद्धैरग्निकल्पैर्महात्मभिः ॥ २५
सततं संकुलं श्रीमद्ब्रह्मकल्पैर्महात्मभिः ।
अब्भक्षैर्वायुभक्षैश्च शीर्णपर्णाशनैस्तथा ॥ २६
फलमूलाशनैर्दान्तैर्जितरोषैर्जितेन्द्रियैः ।
ऋषिभिर्वालखिल्यैश्च जपहोमपरायणैः ॥ २७
वसिष्ठस्याश्रमपदं ब्रह्मलोकमिवापरम् ।
ददर्श जयतां श्रेष्ठो विश्वामित्रो महाबलः ॥ २८

इति श्रीरामायणे बालकाण्डे पञ्चाशः सर्गः ॥५०॥

G I 52 27
B 1 51 28
L 1 47 27

---

1054* बहुपुष्पफलं रम्यं यक्षराक्षसवर्जितम् ।

[ D11 महर्षिगणसेवित (for the post half) ]

24 N2 B1 om (hapl) $24$–$25^b$ V B2-4 D10.13 om (hapl) 24 M3 reads $24$–$25^b$ *inf lin sec m* G1 2 read $24^{ab}$ after $25^{ab}$ —$^a$) Ś1 D1 3 5 7 11 12 -गाधर्वैः (for -गन्धर्वैः) —$^b$) D1 उपसेवित (for उपशोभितम्) —$^{cd}$) D4 किंह (for -संघ) Ś1 D1 3 5 7 11 12 नानाविहग(D1 3 °ह्रंग, D5 °गह[ metathesis ])नादित (for $^d$) G2 M1 प्रकीर्णद्विजसंघाद्यैर्हरिणौघनिषेवित

25 Ś1 Ñ2 B1 D1 3 5 7 11 12 om (hapl) while M3 reads $25^{ab}$ *inf lin sec m* (for Ñ2 B1 M3 cf v l 24) —$^a$) B3 D10 13 देवर्षि (for ब्रह्मर्षि) V1 B2 -संपूर्णं V3 महाश्रममिदं तत्तु B4 नानामुनिसमाकीर्णं —$^b$) V3 B2 4 D10 13 ब्रह्मर्षि (for देवर्षि) V B2-4 D13 पूजित (for सेवितम्) —After $25^{ab}$ G1 2 read $24^{ab}$ —$^c$) V1 D13 चरित्र (for -चरण) G1 2 पुराणैस्तपसा सिद्धैर् —$^d$) D13 महर्षिभि (for महात्मभि)

26 D1 3 7 T1 om (hapl.) $26^{ab}$ —$^a$) N2 B3 D10 सततं V3 सगण, V4 कुशल, Ct as in text (for संकुल) V3 ग्राम, D10-13 श्रीमान् (for श्रीमद्) —$^b$) G1 M1 ब्रह्मपुत्रैर्, Ct as in text (for °कल्पैर्) Ñ2 V3 4 B1 3 D13 महात्मभि, V1 damaged V3 महर्षिभि, B4 महात्मभि (for महात्मभि) —$^c$) M3 अम्भक्षैर्, Cm g c as in text (for अब्भक्षैर्) —$^d$) D3 पर्णे (sic) G1 चीर्ण G2 शीर्ण (for शीर्ण) Ś1 B4 D1 3 5 7 11 12 M3 -पर्णाशिभिस् D5 12 यथा (for तथा)

27 D7 om $27^{ab}$ —$^a$) N2 V2 4 B D10 13 M3 फलमूलाशिभिर् D5 फलमूलाशिभिर्वीरैर् —$^b$) Ñ1 (marg) V1 3 4 B D10 13 क्रोधैर्, Dt D5 6 दोषैर् (for -रोषैर्) —V1 damaged from पै in $^b$ up to इम in 1055* —After $27^{ab}$, Ś1 N2 V B D1 3 5 10 13 ins, while M3 ins, after 27

1055* समक्षारैरश्मकुट्टैर्दन्तोलूखलिभिस्तथा ।

[ V1 damaged up to इम B4 प्रक्षालनैर् D5 सुप्रक्षालैर् (hypermetric) (for समक्षारैर्) V3 सज्जुलाभैर् रमकुट्टैर् V4 संपताकैरश्मकुट्टैर् M4 संप्रक्षालनकुट्टैश्च (for the prior half) M4 [उ]लूखलैर्, (for °लिभिस्) D3 दन्तोलूखिभिस्तथा (sic) (for the post half) ]

—$^c$) Ś1 D5 11 12 °स्वयंवैर्, B D5 10 वालि°, D1 3 7 वालिखिल्यादैर् (for वालखिल्यैश्च) —$^d$) V1 (with hiatus) उपहोम, D2 जपाहार (sic?) (for जपहोम) —After 27 Ś1 (marg) Dt D4 6 9 14 T G2 4 M1 2 Cm ins

1056* अन्यैर्वैखानसैश्चैव समन्तादुपशोभितम् ।

[ Cm वैखानसैस् ]

28 $^a$) Ś1 Ñ2 V2-4 B D1-3 5 7 10-13 M3 ब्रह्मस्थानं मनुत्तमं(M1 °मिवाकुलं) V1 damaged —$^c$) Ś1 N2 V B D1 3 5 7 10-13 अपश्यत (for ददर्श) Ś1 D1 3 5 7 12 13 M3 जपता, Ñ2 V1-3 B3 D10 13 यजता V4 B1 जयता, B1 missing D4 तपता, D11 यगती (sic) Cm t as in text (for जयता) B1 missing D5 श्रेष्ठ —$^d$) Ñ2 V B D13 महामना M4 महातपा —After 28 Ś1 D5 11-13 ins

1057* वातोद्धूतं तपनवाहसमं नियम्य
वल्गावशेन तुरगं च शशाङ्कशुभ्रम् ।
दीव्यत्प्रभानिकरकुण्डललोलमानं
कणत्सुरगमवतारूप उपद रः ।

[ (l 1) D13 निर्भ (for -सम) —(l 2) D11 वलाब्दसेन (sic) (for वल्गावशेन) —(l 3) D5 दीप्यद् D11 12 दिव्य D11 दीव्यत्प्रभावमकर (hypermetric) ]

Colophon *Kanda name* Ś1 Ñ2 D1 3 12 om V B3 D13 आदि°, D2 अयोध्या° —After Kanda name B4 ins बालचरिते —*Sarga name* Ś1 D3 5 7 9 11 वसिष्ठाश्रमदर्शनं(D1 7 9 °नो D5 °दर्शनो) N2 V2-4 B D10 शतानन्दवाक्य V1 शतानन्दवाक्ये वसिष्ठाश्रमदर्शनं D1 वसिष्ठाश्रमपदो, D3 वसिष्ठस्याश्रमदर्शन D13 वसिष्ठाश्रमो —*Sarga no* (figures words or both) Ś1 V1 4 B1 4 D5 6 12 om, N2 B2 3 D10 52 V2 D5 54 V3 Dt D4 6 9 14 S (except M3) 51 D1 40 D3 38 D7 39 D11 44 D13 रामा—वाल—वसिष्ठा—वर्णनं 52 —After colophon T1 concludes with श्रीरामचन्द्राय नमः G1 2 4 M3 श्रीरामाय नमः, G3 श्रीमते रामानुजाय नमः

# ५१

G 1 53 1 B 1 52 1 L 1 48 1 स दृष्ट्वा परमप्रीतो विश्वामित्रो महाबलः ।
प्रणतो विनयाद्वीरो वसिष्ठं जपतां वरम् ॥ १
स्वागतं तव चेत्युक्तो वसिष्ठेन महात्मना ।
आसनं चास्य भगवान्वसिष्ठो व्यादिदेश ह ॥ २
उपविष्टाय च तदा विश्वामित्राय धीमते ।
यथान्यायं मुनिवरः फलमूलमुपाहरत् ॥ ३
प्रतिगृह्य च तां पूजां वसिष्ठाद्राजसत्तमः ।
तपोऽग्निहोत्रशिष्येषु कुशलं पर्यपृच्छत ॥ ४
विश्वामित्रो महातेजा वनस्पतिगणे तथा ।
सर्वत्र कुशलं चाह वसिष्ठो राजसत्तमम् ॥ ५
सुखोपविष्टं राजानं विश्वामित्रं महातपाः ।
पप्रच्छ जपतां श्रेष्ठो वसिष्ठो ब्रह्मणः सुतः ॥ ६
कच्चित्ते कुशलं राजन्कच्चिद्धर्मेण रञ्जयन् ।
प्रजाः पालयसे राजन्राजवृत्तेन धार्मिक ॥ ७
कच्चित्ते सुभृता भृत्याः कच्चित्तिष्ठन्ति शासने ।
कच्चित्ते विजिताः सर्वे रिपवो रिपुसूदन ॥ ८

## 51

☞ Ñ1 missing Sarga 51 (cf v. l. I. 33. 8) —Before 1 Ś1 V1 B2.4 D1.3.5.7 11–13 ins.

1058* वसिष्ठं तु तदा तस्मिन्नाश्रमे मुनिसत्तमम् ।

[Ś1 begins with ॐ. D12 वसिष्ठ् (corrupt). Ś1 च (for तु). D5 मुनिसत्तम.]

1 a) Ś1 D1.3.5.7.11.13 दृष्ट्वा तु, D2 D4.6 T2 तं दृष्ट्वा; Cg. k as in text (for स दृष्ट्वा). D1–3.7 राघव (for परम). —b) Ś1 °मुनि, Ñ2 °मन, B1 D1.3.5.7.11.13 °मना (for महाबल). —c) D5 प्रणताद् (sic). G1–3 M3 प्रणम्य, Cm. g. k. t as in text (for प्रणतो). B4 वीरै (for वीरो). —d) V1 B3 D13 पज्ञतां, V4 D11 तपतां; B4 जपतां (for जपतां). V2 वसिष्ठो जगतां वरं.

2 a) Ś1 D1.3.5.7.11 भवता. Ñ2 V2.4 B2.4 D10.11 च तव (by transp.). V2 B1.3 D12 च तथा, D6 भगवता (hypermetric) (for तव च). Ś1 Ñ2 V B D1.3.5.7.10–13 [इ]त्युक्त्वा (for [इ]त्युक्तो). —c) D6 भगवन् (sic) (for भगवान्). —d) D6 व्यदिदेश. T2 चादिदेश, G1 [ऽ]प्यादिदेश, M4 ह्यादिदेश, Cm. g. k. t as in text (for व्यादिदेश). —For 2cd, Ś1 Ñ2 V B D1–3.5.7.10.13 subst.

1059* आसनं तत्र विधिवत्प्रददौ जगतीपतौ ।

[Ñ2 V1.3.4 B D3.7.10.11 (V4 D3.7 read after विधिवत्) तस्य (V4 °स्मै). V2 च (submetric) (for तत्र). B1 missing from वत् up to जग. Ñ2 V1.3.4 B D1–3.7.10.11 प्रदिश. V2 प्रदीश (for प्रददौ). Ñ2 V B D3.7.10.11.13 जगतीपते.]

3 a) V2 तदौ, B1 तथा, D12 ततो (for तदा). —c) Ś1 D5.12.13 वृष्य (D5.12.13 °स्यां) सम्य, Ñ2 B2.4 D10 वृष्यासम्य, V2 B3 वृष्यासम्य, V4 B1 वृष्ट्वा (B1 °ष्ट्वा) मध्या, D1 विश्वामित्रो, D2 दश्यमान्यो, D3.7 वृश्या (D3 °स्या) मध्ये (sic) (for यथान्याय). D1 मुनिवरात्, D6 ऋषी राम, G1.3 ऋषिश्रेष्ठ (for मुनिवर). V2 स्वयं मुनिवर धीमान्, V3 वसिष्ठो महाप्राज्ञस्तु, D11 अर्घं मुनिवरो दत्त्वा. —d) V4 फल (for फल). D3 missing मूल. D13 S (except M3.4) -मूलानि, Cg. h. t as in text (for -मूलम्). D11 अथाहरत्. ※ Cg. k फलमूलमिति "जातिराप्राणिनाम्" इत्येकत्वम् । ※

4 a) Ś1 D5.13 वत्ां, D2 D4.6–9 G1 M3 तु तां (for च तां). —b) D3.11 राजसत्तम. —c) Ś1 D5.7.12.13 तदा (D2 °दा; D3 °तो, D5 °था) मिहोत्र (D5 °त्र); Ñ2 V B D10.11 तमग्निहोत्रे (Ñ2 B3 D10 °त्र, V1 °त्र). V2.3 B2.4 D12 शिष्ये च (for शिष्येषु). —d) Ś1 D1–3.5.7.11–13 पर्यपृच्छदनामयं, Ñ2 V B D10 पप्रच्छ कुशलं तत (V4 °दा); Cl. as in text.

5 b) B1.2.4 गणेषु, G3 M3 गणे (for गणे). B4 D1 D6.8.10.12 T G M1.2 तदा (for तथा). —c) Ś1 Ñ2 V B D1.3.5.7.10–13 पोवाच. D2 D4.6 प्राह. G2 स्वाह (for चाह). —d) Ś1 Ñ2 V B D1.3.5.7.10–13 मुनिसत्तम (D4 °म), D8 मुनिपुंगव, Cg. as in text (for राजसत्तमम्).

6 a) G2 सुखोपविष्टो. M3 उपोपविष्ट (for सुखोपविष्ट). D6 यज्ञादि (for राजानं). —b) D12 विश्वामित्रो. —c) Ś1 Ñ2 V B D1.3.5.7.10–13 समपृच्छत (for पप्रच्छ). V1 *जिता, V2 B1 M1 यजतां, V3 B4 जगतां, D12 G1.2 M4 जयतां, Cm. t. as in text (for जपतां). —d) Ś1 Ñ2 B2.3 D1.3.5.7.10–13 गाधेयं. V1.2.4 B1.3 D3.7 गाधिज (for वसिष्ठो). D12 सुतं (sic).

7 b) D12 ब्राह्मणरक्षणे. M4 °रजनं (for धर्मेण रञ्जयन्). —c) V2 पालयते, B4 पाद्यसे, D12 पालयतो (for पालयसे). Ś1 Ñ2 V B D1.3.5.7.10–13 T3 नित्य, D14 T1.2 G4 वीर, G1.3 कच्चिद् (for राजन्). —d) V4 B4 राज (V4 °*) धर्मेण, D6 राज्य° (for राजवृत्तेन). V2.3 B2 D3.12 G1 धार्मिक. M4 पालयन् (for धार्मिक).

8 a) D1 कच्चित्से (for कच्चित्ते). Ñ2 सुभृता, V2 तु सुता, V3 सुखिनो, B2 सुहृता, B3 [ऽ]तुभृता, D2 D6.8.9 G1.3 M3 Cm. g. t. सम्भृता (D6 °**) (for सुभृता). B1 ***** भृत्याश्च. —b) D10 कच्चित्ते कुशलं नृप. —c) D1 कच्चिच (for कच्चित्). D1–3.7 च (for ते). V3 निर्जिता, D1 (अ)वर्जिता (for विजिता). —d) B1 [ऽ]रिनिसूदन

कच्चिद्बले च कोशे च मित्रेषु च परंतप ।
कुशलं ते नरव्याघ्र पुत्रपौत्रे तथानघ ॥ ९
सर्वत्र कुशलं राजा वसिष्ठं प्रत्युदाहरत् ।
विश्वामित्रो महातेजा वसिष्ठं विनयान्वितः ॥ १०
कृत्वोभौ सुचिरं कालं धर्मिष्ठौ ताः कथाः शुभाः ।
मुदा परमया युक्तौ प्रीयेतां तौ परस्परम् ॥ ११
ततो वसिष्ठो भगवान्कथान्ते रघुनन्दन ।
विश्वामित्रमिदं वाक्यमुवाच प्रहसन्निव ॥ १२
आतिथ्यं कर्तुमिच्छामि बलस्यास्य महाबल ।
तव चैवाप्रमेयस्य यथार्हं संप्रतीच्छ मे ॥ १३
सत्क्रियां तु भवानेतां प्रतीच्छतु मयोद्यताम् ।
राजंस्त्वमतिथिश्रेष्ठः पूजनीयः प्रयत्नतः ॥ १४
एवमुक्तो वसिष्ठेन विश्वामित्रो महामतिः ।
कृतमित्यब्रवीद्राजा पूजावाक्येन मे त्वया ॥ १५
फलमूलेन भगवन्विद्यते यत्तवाश्रमे ।
पाद्येनाचमनीयेन भगवद्दर्शनेन च ॥ १६
सर्वथा च महाप्राज्ञ पूजार्हेण सुपूजितः ।
गमिष्यामि नमस्तेऽस्तु मैत्रेणेक्षस्व चक्षुषा ॥ १७

G 1 53 17
B 1 52 17
L 1 48 18

---

9 ᵃ) Ś1 D5 12 13 कच्चित्ते कुशलं कोशे, Dt D6 8 14 T1 2 G1 M1 2 Cg t कच्चिद्बलेषु कोशेषु —ᵇ) D2 12 13 परतप, D3 पर * * —ᶜ) B3 D14 नृपव्याघ्र, D11 नरव्यघ्र (sic) (for नरव्याघ्र) —ᵈ) Ś1 V1 2 B1 D1 3 5 7 11 13 पौत्रेषु चा° (D12 वा), D10 पौत्रैश्च°, D14 T1 2 G1 M3 पौत्र तथानघ, T3 पौत्रेषु मानद (for पौत्रे तथानघ)

10 ᵃ) D11 सर्वत (for सर्वत्र) Ś1 D5 12 राज्ये (for राजा) —ᵇ) Ś1 D5 12 भवत, D1 3 7 तमथ, M4 खल्वथ (for वसिष्ठं) Ś1 Ñ V B D1 3 5 7 11 13 प्रत्युवाच ह (for प्रत्युदाहरत्) —ᵈ) Ñ2 V B D10 13 तमथो (V2 °तो), D11 तमृषिं Cm g as in text (for वसिष्ठं) Dt D6 8 G1 M4 Cm विनयान्वितं, D14 विनयान्वित Ch as in text (for ᵈ)

11 ᵃ) Ś1 Dt D5 8 11 13 तौ, Ñ2 V2 4 B D1 3 5 7 M4 तु, V1 2 D3 च, D10 om (submetric) (for [त्वो]भौ) D10 12 सुचिर (for सुचिरं) V1 सुचि * * (lacuna) द —ᵇ) D6 14 T1 2 G1 2 4 M3 4 तौ, T3 ता (sic) (for ताः) D1 कथा (for कथाः) Cv r g t ता कथा (as in text) Dt D6 8 + M3 4 तदा, D4 T3 G1–3 M1 तथा (for शुभाः) Ś1 D1 3 5 7 12 बहुवृत्तान्त(Ś1 °तु, D3 °च)स(Ś1 D3 सत्)कथा Ñ2 V B D10 13 धर्मिष्ठा ता कथा तदा(B4 °था), D11 कथ(बहुविधा तदा —ᶜ) D12 युक्ताम्, T3 युक्त (sic) (for युक्तौ) —ᵈ) Cm g k t प्रीयेता(as in text) Ś1 Ñ2 V B D1 3 5 7 10–13 अभिन(Ś1 B4 °व, D13 °नि [sic])य (for प्रीयेता तौ)

12 ᵃ) M4 तथा (for ततो) —ᵇ) Ś1 Ñ2 V (V1 lacuna from स up to मित्र in ᶜ) B D1–3 5 7 10–13 M4 मुनिसत्तम (D2 3 °म, M4 °म)

13 ᵇ) Ñ2 B1 4 D1 13 °बल, V4 °बल (for महाबल) —ᵈ) Cv r m g t सप्रतीच्छ (as in text) V1 lacuna after the first syllable प्र up to प्रतीच्छतु in 14ᵇ Ś1 Ñ2 V2–4 B D1–3 5 7 10–13 प्रतिगृह्यताम् (for संप्रतीच्छ मे)

14 V1 lacuna up to प्रती च्छ (cf v l 13) —ᵃ) D4 सत्क्रिया (sic), D5 सत्कृता (for सत्क्रियां) Dt D1 4 8 11 13 T3 M3 हि (for तु) Ś1 D5 11 13 तानि, D3 5 7 तावत्, D4 6 T3 G2 M2 3 त्वतः (for एताः) Ñ2 V2 4 B D10 प्रतिगृह्णातु, G1 3 महतीं चैता, M4 निर्वितता (for तु भवानेता) —ᵇ) Ñ2 V3 4 B1 3 D10 भवानिह, D3 प्रगच्छतु, G1 3 प्रतीच्छ त्वं, M4 प्रतीच्छत्त्वं, Ck as in text (for प्रतीच्छतु) Cm g [उ]द्यता(as in text) V1 D13 समोद्यता, Dt D6–8 मया कृता, D4 M3 मयोदिता (for मयोद्यताम्) B4 भवानिहमिहोद्यता (sic) D3 प्रतीच्छतुम बोधता (sic) —ᶜ) D14 T1 2 G1 राजा (for राजन्) B3 D3 तम्, D12 स्वम् (for °त्वम्) D3 4 7 10 11 G2 अतिथि (for अतिथि) V2 4 B1 D12 M1 श्रेष्ठ (for श्रेष्ठः) D11 राज्य चमतिथि श्रेष्ठ (corrupt) —ᵈ) D12 पूजनाय (for पूजनीय)

15 ᵃ) D3 उक्त्वा D11 उक्ते (for उक्तो) —ᵇ) V1 lacuna for मित्रो महामति Ś1 V2–4 B D1 2 7 10–13 M4 महा(D13 °हा)पति, Dt D3 6 8 T1 °मुनि, G2 M1 °तपा, Cv as in text Cr °बल (for महामति) —ᶜ) V4 B1 कृतकृत्यो ब्रवीद् T3 वाक्य (for राजा) Cv r as in text (for ᶜ) —ᵈ) D11 om Cm g प्रिय, Ch t पूजा (as in text) Ś1 D5 12 नाथेन, Ñ2 V3 4 B D1 3 7 10 11 13 चानेन, V1 वन्येन, V2 [अ]निन च (for वाक्येन) M3 वाक्येनानेन Ś1 Ñ2 V1 3 4 B D1 3 5 7 10–13 मे कृता(Dt °ता) V2 सत्कृतो (for मे त्वया)

16 Before 16ᵃ D12 wrongly repeats 15ᵃ —ᵃ) Ś1 कृत(marg also as in text)मूलेन, D3 फलमूले हि, D11 फलमूले (submetric) (for फलमूलेन) —ᵇ) D9 यत्र च, D14 यस्तव, T1 यत्तद् (for यत्तव) Ñ2 V B D10 M4 तव यद्विद्यते प्रभो (M4 वने) —ᶜ) Ś1 D5 12 पाद्ये चाचमनीये च, B1 पाद्यार्घ्याचमनीयेन —ᵈ) D3 भगवा (sic) (for भगवद्) D11 भगवर्द नेन च (sic)

17 ᵃ) Ś1 D4 सर्वदा Ś1 D5 11 °बाहो, Ñ2 V B D1 3 7 10 [ए]व महातेज (V2–4 B4 °जा), D6 हि°, D13 ° – –, D13 °बुद्ध, G2 M1 सु°, M4 [अ]ह महाभाग (for च महाप्राज्ञ) —ᵇ) Ś1 Ñ2 V B D1 3 5 7 10 12 [अ]तिम°,

G 1 53 18 B 1 52 18 L 1 48 18

एवं ब्रुवन्तं राजानं वसिष्ठः पुनरेव हि ।
न्यमन्त्रयत धर्मात्मा पुनः पुनरुदारधीः ॥ १८

बाढमित्येव गाधेयो वसिष्ठं प्रत्युवाच ह ।
यथा प्रियं भगवतस्तथास्तु मुनिसत्तम ॥ १९

एवमुक्तो महातेजा वसिष्ठो जपतां वरः ।
आजुहाव ततः प्रीतः कल्माषीं धूतकल्मषः ॥ २०

एह्येहि शबले क्षिप्रं शृणु चापि वचो मम ।
सबलस्यास्य राजर्षेः कर्तुं व्यवसितोऽस्म्यहम् ।
भोजनेन महार्हेण सत्कारं संविधत्स्व मे ॥ २१

यस्य यस्य यथाकामं षड्रसेष्वभिपूजितम् ।
तत्सर्वं कामधुग्दिव्ये अभिवर्ष कृते मम ॥ २२

रसेनान्नेन पानेन लेह्यचोष्येण संयुतम् ।
अन्नानां निचयं सर्वं सृजस्व शबले त्वर ॥ २३

इति श्रीरामायणे बालकाण्डे एकपञ्चाशः सर्गः ॥५१॥

M4 च° (for सुपूजित) D11 पूजार्हेश्चि पूजित (submetric) —ᶠ) Ś1 D12 °स्कृत्य, D2-4.6.7.11.13 °स्तुत्य, M3 मुनिश्रेष्ठ (for नमस्तऽस्तु) D2 D5 ममस्तेस्तु गमिष्यामि (by transp) —ᶠ) Ś1 D2.3.6.7.11-13 पश्य मैत्रेण, M4 मित्रेण° (for मैत्रेणेक्षस्व) D1 (marg gloss) सुखाशंसि प्रीतिकर मैत्र चक्षुर्निरीक्ष्यते

18 ᵃ) V2 ब्रुवते (for ब्रुवन्तं) —ᵇ) Ś1 D5.11-13 °व, Ñ2 V1.3 B2-4 D1-3.7.10 M4 °तु, V4 भगवीन्, B1 °तं, M3 °ह (for एव हि) —ᶜ) T2 °यति M2 न्यमन्त्रयत् Cm.g as in text M4 धर्मियात् (for धर्मात्मा) Ñ2 V B D10.12 स्य(V3 ति)मन्त्रयदमेयात्मा

19 ᵃ) D1 (marg gloss) तथेति एवं करिष्यामि (for बाढम्) V1 गाधिनो (sic) M1.2 गाधेयो Cg as in text (for गाधेयो) —ᵇ) Ś1 D2-5.6.7.11-13 प्रत्य(D13 °नि)भाषत —ᶜ) V3 यथं (sic) (for प्रिय) D12 lacuna for भगवतस —ᵈ) D3 तथास्तु (for तथास्तु) Ñ2 V B D1 D3.8.10.14 T1.3 G4 M4 °पुंगव (for मुनिसत्तम)

20 ᵃ) B3 महातन (sic) D1 D10 तथा तेन (for महातेजा) —ᵇ) B3 यजता, D12 जपता (for जपतां) —ᶜ) V3.4 आजहार (for आजुहाव) V4 प्रीत्या, D11 प्रीत (sic) G3 M1 प्रीतं (for प्रीतः) —ᵈ) Ś1 Ñ2 V B2.4 D4.10.12.13 कल्म(Ś1 V1 D12.13 °ल्मा)षां, B1 कामदां D1 (marg gloss) इष्टपादुरा धेनु, D2 कल्मषी (sic) D11 शबलां, Cm g k t as in text (for कल्माषीं) Ś1 पूत (for धूत) B2 D1 D4.6.8.9.12 M3.4 -कल्मषः (for -कल्मष)

21 ᵃ) V B1.4 D1.7.11 सबले(V3 °ल), T2 G M1.3 शबले B3 शीघ्रं (for क्षिप्रं) —ᵈ) Ñ2 V B D1 3.4.7.10.13 चैव, D10 चैव (for चापि) Ś1 D12 शृणुष्व(D11 °वै) वचन मम —ᶜ) B1 च (for [म]स्व) —ᵈ) D3 कर्तुं (sic) (for कर्तुं) Ś1 Ñ2 V B D1-5.7.8-13 T1.3 G2-4 M1.2 हि, Cg t as in text (for ऽस्मि) V1 [म]यं, V4 [म]स्मि (for [म]हम्) M4 कृताञ्च भोजनं मया —ᶜ) D3 भोजनेन हि (hypermetric) D11 भाजनेन, M4 सत्कारेण (for भोजनेन) D4 महार्घेण (for °र्हेण) —ᶠ) Ś1 Ñ2 V2.4 B D1.3.5.7.10-13 सन्निधत्स्व(B4 D1.7.11 °स्व [sic]) V1 मन्निधत्स्व, V3 विदधस्व, M3 स्वं विधिस्व, Cm g t as in text (for संविधत्स्व) M4 यथावत्सन्निधत्स्व मे

22 ᵃ) Ñ2 B D10-13 °काम, V1 D6 °काम (for यथाकामं) —ᵇ) V1 यत्र येषु, V3 षड्रसो हि, D3 षड्रसेष्ट, D10 पड्रसेषु (for षड्रसेषु) Ñ2 V B D10.13 °पाक्षित (V4 °तं), D13 °काक्षित (for [अ]भिपूजितम्) Ś1 षट्स्वाभीष्टो रसेष्विह, D2 षड्भीष्ट रसेष्विह, also marg षड्भिरिष्टे रसैरिह D3.7.11 षड्(D11 **)भीष्टरसेष्विह(D7 °ष्वह), D6 षड्वरीष्यो रसेष्विह; M4 प्रथम(दृष्टा)स्यतिथिपूजने, all Cs as in text —ᶜ) V3.4 B1 तं, B3 तु (for तत्) D11 सर्व (for सर्वं) D3 का**धुक् (for कामधुग्) Ś1 B1 D1-4.7.11.13 M4 देवि, V3 दिव्येद् D12 देवि (for दिव्ये) V4 lacuna for धुग्दिव्ये —ᵈ) Ś1 D2.4.7.11-13 प्रयम त्व, D6.9.14 T G4 M3.4 प्रवर्षस्व, Cv m g as in text (for अभिवर्ष) V1.3 B1 [इ]ह म कृते, B2 च मत्कृते D1 (marg also) मम कृते (by transp) D3 तु मे मम (for कृते मम) Ñ2 V3 B3.4 D10 Cr अभिवर्षस्व(B4 °सु) मत्कृते, V4 अभिवर्षं सह कृते

23 ᵃ) Ś1 D2.5.6.7.11.13 परेणान्नेन, Ñ2 V B D10 रसैरन्नै(V1.4 °न्यै)न (for रसेनान्नेन) D12 lacuna G3 पालेन (for पानेन) Cv r m g t as in text (for ᵃ) —ᵇ)

# ५२

एवमुक्ता वसिष्ठेन शबला शत्रुसूदन ।
विदधे कामधुक्कामान्यस्य यस्य यथेप्सितम् ॥ १
इक्षून्मधूंस्तथा लाजान्मैरेयांश्च वरासवान् ।
पानानि च महार्हाणि भक्ष्यांश्चोच्चावचांस्तथा ॥ २
उष्णाढ्यस्यौदनस्यापि राशयः पर्वतोपमाः ।
मृष्टान्नानि च सूपाश्च दधिकुल्यास्तथैव च ॥ ३
नानास्वादुरसानां च षाडवानां तथैव च ।
भाजनानि सुपूर्णानि गौडानि च सहस्रशः ॥ ४ G. I. 54. 4 B. I. 53. 4 L. I. 48. 29

G1 M3 4 हेहे; Cg.k as in text (for हेहय-). T2 G1 3 M1 (before corr.) 2 -क्रोध्येण; G2 4 -क्रोधेण; M2 -क्रोध्येनु-; Cm g as in text (for -चोच्येण). Ś1 Ñ2 V B D1-3 6.7. 10-13 चोच्य( V3 °च्यैर् )ले( D13 °रो )क्षेन (by transp.). Ś1 D5 चाप्यय; Ñ2 V B D10 सत्वरं; D1 3 चातय ( D2 °पा [sic] ); D3 वाशय; D7 चाशयः (sic), D11 चानये; D12 13 चाप्यसुं; M4 मा चिरं (for सपुत्रम्). —V1.3 om. 23$^{cd}$. —$^{c}$) T2 3 G4 समाहत-; Cm g t as in text (for समाहतं). —$^{d}$) T1 2 G M1-3 वापले, D4 T3 त्विह; G2 M1 मम (for स्वर). —For 23$^{cd}$, Ś1 V1 D1-3 6.7 11-13 subst. :

1060* राजानं सपरीवारं शबले मन्नियेप्सया ।
यथा सर्वो जनस्तुष्येत्स्वादितश्च यथा भवेत् ॥

[ (l. 1) D3 11.12 °च्छया, D13 मत्प्रेयया (for मन्नियेप्सया). V1 सर्णे सम्भिरेच्छया (for the post. half). —V1 om. l. 2. —(l. 2) Ś1 तुष्ये (for तुष्येत्). D1 आश्रितश्च; D3 स्वतश्च (submetric); D6 स्वाद्यतश्च; D11 स्वादितश्च (for स्वादितश्च) ] while Ñ2 V3 B D10 subst.:

1061* कुरु राज्ञोऽस्य शबले परमातिथ्यसत्क्रियाम् ।

[ Ñ2 हि, V3 [ऽ]पि (for ऽस्य). Ñ2 V3 B1 सुबले, B1 सत्क्रिया° (for सत्क्रियाम्).]

Colophon. Ś1 D1 2 3 11-13 om (cont. the previous Sarga). —*Kāṇḍa name*. V1 4 D3 om. Ñ2 V2 3 B D10 आदि°; D3 अयोध्या°. —*Sarga name*: Ñ2 V B D3 7 10 शतानन्दवाक्ये (V1 2 B2 D3 7 om.) विश्वामित्रनिमन्त्रणं (B4 वसिष्ठवचन); D5 धेनुप्रार्थना. —*Sarga no.* (figures, words or both): V2 4 B1.4 D3 om. Ñ2 B3 3 D10 53, V2 D3 55, V3 Dt D4 8 14 S (except M5) 52, D7 40. —After colophon, T2 concludes with श्रीरामः शरणं मम, G1 2.4 M3 श्रीरामाय नमः, G3 श्रीमते रामानुजाय नमः.

## 52

☞ Ñ1 missing up to स्थानं in 20$^{b}$ (cf. v.l. I. 33. 8). Ś1 D1 2.6 11-13 continue the previous Sarga.

1 $^{a}$) B1 3 4 G1 3 4 M4 उक्तवा; Cg as in text (for उक्ता). G2 (after corr. as in text) मुनिश्रेष्ठ (for वसिष्ठेन). —$^{b}$) Ś1 रघुनन्दन (for शत्रुसूदन). —After 1$^{ab}$, D1 ins.:

1062* स्वरभ्य पादावानुज्ञय कर्णौ पुच्छं तु भ्रामयत् ।

—$^{c}$) D2 किं वृधि (sic), D5 वदधे; D13 विधदे (metathesis) (for विदधे). V3 D10 कामदा. Ś1 D1 2 6 7.11-13 कामं; V6 lacuna for का; D3 वासं (for कामान्). V3 4 यथेष्टं विदधे कामान्. —V1 damaged for $^{c}$. —$^{d}$) Ñ2 V2-4 B D10 यथेप्सितान्; Dt D4 5 8 11 14 T3 G1.3 4 [इ]प्सित यथा (by transp.); D6 [इ]प्सितं तदा Ś1 D1-3 6.7.12 13 यथा यस्येप्सितं तथा; Cv m g k t as in text.

2 $^{a}$) Ck t मधून् (as in text), D6 मधूंस्तथा द्राक्षान्; D14 T1 G4 मधुरसाल्लाजान्; T2 मधु तथा लाजान्; M2 मधूंश्च लाजांश्च. ✤ Cg. मधूनिति पुल्लिङ्गत्वमार्षम् । ✤ —$^{b}$) T2 M5 रसासवान्; G2 वरासनान्. D6 मैरेय च वराननाः. —For 2$^{ab}$, Ś1 Ñ2 V B D1-3 6.7.10-13 M4 subst.:

1063* इक्षूंश्च मधु लाजांश्च मैरेयं च वरासवम् ।

[ Ñ2 V B D10 इक्षु (D10 °क्षून्) मधु च (V2 B4 र; V4 ∗) (for इक्षूंश्च मधु). Ś1 -आ°, D1 5-जालांश्च (metathesis?) (for लाजांश्च). D11 इक्षु मधुरसं श्चैव (for the prior half). D10 om च (submetric). V2 रसाभर, V3 सुरासव, D3.7 वरासन, D1 स चासव (for वरासवम्).]

—$^{c}$) Ś1 D5 12 13 पुनानि; V2 फलानि (for पानानि). V4 D13 om (submetric), B2 *inf. lin.*, T3 इ (for च). Ś1 महार्घ्याणि. —$^{d}$) V4 B1 2.4 D1 4 5 9 13 भक्ष्यांश्च Ñ2 V B D10 च विविधान्; T2 M1 उच्चावचांस् (for चोच्चावचास्). Ś1 D1-3 6 7.11-13 बहून्; Dt D6 1 5 अपि; G4 तदा, M4 शुभान् (for तथा).

3 V1 damaged for $^{a}$. —$^{a}$) Ś1 V2 3 D1-3 6 7 12 13 M4 बाष्पाढ्य( D7 °च )स्य ( V3 °क्ष्यम् ); Ñ2 B चोष्णाढ्यस्य (B3 m. also व्यञ्जनस्य); V4 हराढ्यम्; D6 उष्णाशस्य; D10 चोष्णाधस्य; D11 चोप्याढ्यस्य (sic) (for उष्णाढ्यस्य) G3 [ओ]दनं च (for [ओ]दनस्य). Ś1 Dt D6-4 8 9 14 T1 3 G4 M4 [अ]न्नः; D1 3 [अ]थ, D2 7 [अ]स्य, D11 [आ]दुः; G1 [अ]पि द्विः; G3 [आ]दन् (for [अ]पि). —$^{b}$) Ś1 Ñ2 V B D1-3 6.7. 10-13 राशीन्पर्वत( V1 damaged )सन्निभान्. —$^{c}$) Ś1 B3 D1-3 7 12 13 तथाप्यूपान्; D9 14 T1 2 G2 4 M1-3 च सूपांश्च (for च सूपाश्च) Ñ2 V B1 3 4 D3 10 11 मिष्टाश्च( B1 °क्ष ) नि तथाप्यूपान् ( V3 °भ्यान्: D11 °प्यजान् [sic] ); Dt D6 8 मृष्टान्यन्नानि सूपाश्च, M4 मिष्टान्नानि च सूपांश्च. —$^{d}$) Ś1 B1 4 D5 M3 दधिकुल्यांस्; D3 दधिनु यकुल्या (sic). V3 शम्कुलीश्च दधीनि च.

4 D9 om (hapl.) 4$^{ab}$. D14 reads in marg.; M1 *inf. lin. sec. m.* 4$^{ab}$. —$^{a}$) D1.8 G1 M3 -स्वाद- (for

G 1 54 5 B 1 53 5 L 1 48 29 सर्वमासीत्सुसंतुष्टं हृष्टपुष्टजनाकुलम् ।
विश्वामित्रबलं राम वसिष्ठेनाभितर्पितम् ॥ ५
विश्वामित्रोऽपि राजर्षिर्हृष्टपुष्टस्तदाभवत् ।
सान्तःपुरवरो राजा सब्राह्मणपुरोहितः ॥ ६
सामात्यो मन्त्रिसहितः सभृत्यः पूजितस्तदा ।
युक्तः परेण हर्षेण वसिष्ठमिदमब्रवीत् ॥ ७
पूजितोऽहं त्वया ब्रह्मन्पूजार्हेण सुसत्कृतः ।
श्रूयतामभिधास्यामि वाक्यं वाक्यविशारद ॥ ८
गवां शतसहस्रेण दीयतां शबला मम ।
रत्नं हि भगवन्नेतद्रत्नहारी च पार्थिवः ।
तस्मान्मे शबलां देहि ममैषा धर्मतो द्विज ॥ ९

-स्वादु ) B4 नमाश्चैव ※ Cm g स्वादवो रुच्या रसा माधुर्यादयो येषां । ※—[d] ) Ś1 Dt D6-8 Ct रसा(Ś1 षो) डवानां, Ñ2 V4 B D3 10 11 G1 4 M3 षड्रसानां, V3 M5 परिक्ष्यानां, D1 (gloss) षड्भी रसैर्युक्त पान पाडवं । अथवा 'मांसशाकविमरयुक्तो मुद्गयूषस्तु षाडव' ॥ T2 मादकानां, T3 शांडवानां (for षाडवानां) ※ Cv r g षाडवा षड्रसकृता भक्ष्यविशेषा ।, Ck षड्रसा इति पण्यां रसानां विकार । ※ Ś1 Ñ2 V (V1 damaged) B D3 5 6 7 10–13 इनसार (Ś1 °मा, D6 °दा) (for तथैव च) —[c] ) V1 damaged up to सु Ñ2 V2 B3 (m also as in text) Dt D1 2 4 5 8 14 T1 2 G1 M3 (after corr sec m as in text) भोजनानि ※ Ck t भोजनानि भोजनपात्राणि । ※ V1 2 B1 D4 G2 सु (V1 missing) पणानि, V3 4 B4 G1 2 M1 सुवर्णानि, D12 M4 स (M4 च) पूर्णानि (for सुपूर्णानि) —[d] ) Ś1 V1 3 4 B1 2 D1 (gloss गुडमयानि गौडानि ) 4 6 7 11 13 गौडानां च (D3 om च [submetric]), Ñ2 V2 B3 4 D10 गौडीनां च D3 गौडाद्यान्, G1 कुल्यानि च, M2 गुडानि च M4 गौडाद्यानां (for गौडानि च) B4 विहरत (for सहस्रश ) ※ Cg गौडानि गुडविकारा ।, Ck t गौडानि रसानानि । ※

5 [a]) V2 सुसम्पूर्णं, V4 रस तु°, D6 सुसंतुष्टं M2 सुसंहृष्टं, M3 स्व°, Cg as in text (for सुसंतुष्ट) —[b]) V2 हृष्टं, D3 om (for हृष्ट ) D10 तुष्ट- D11 om (for पुष्ट ) Ś1 Dt D2–5 12 13 T2 M3 4 Cm g -जनावृत, B1 जनाद्रत (sic) B2 -जनार्दने, D1 11 -जनावृत D4 जनैर्वृत (for -जनाकुलम्) —[c]) D12 नाम G1 2 M1 सर्व (for राम) —[d]) V2 D4 T2[थ]ति, Dt D5 8 सु, M2 (after corr inf lin sec m as in text) [श]पि (for [अ]भि ) Ś1 -वंदितं, B4 M1 -पूजितं, D3 12 13 -नंदितं, G1 -हर्षितं (for -तर्पितम्) —After 5 Ś1 Ñ2 V B D1–3 5 6 7 10–13 M4 ins

1064* यस्य यस्य यथा कामस्तस्य तस्य तथा तथा ।
अभिवर्षति कामैर्वै शबला शत्रुसूदन ।
एवमस्य बलं सर्वं सर्वकामाभिपूरितम् ।

[(l 1) V1 damaged यस्य यस्य Ś1 V3 D2 5 13 M4 कामं V1 D11 ग्राम (for कामस्) D10 om (hapl ) second तस्य D2 om (hapl ) second तथा —(l 2) Ś1 D5 12 13 कामांश्च D1 3 7 कामांस्तु M1 कामैर्यान (for कामैर्वै ) —D7 om the post half D11 रघुनन्दन —(l 3) V1 राम D13 काम (for सर्वं) Ś1 D1 3 6 7 11 13 सर्वकामै सु(Ś1 D1 4 12 13 म)पूजितं (for the post half) ]

6 M4 om 6[ab] —[a]) Dt D6 8 हि (for ऽपि) Ñ2 V B D10 विश्वामित्रस्य राजर्षे —[b]) V2 हृष्टि , B2 T2 M1 2 (sec m , before corr as in text) Cg हृष्ट, D1 14 T3 तुष्ट; T1 G1 Cm तुष्ट (for हृष्ट ) Ñ2 V1 3 4 B1 2 तुष्टं, V2 तुष्टिः; D4 marg Cm g as in text (for पुष्ट) V2 D1 14 T2 3 G2 तथा (for तदा) —D3 om 6[c]–7 —[c]) Ñ2 V B D10 -जनो (for -वरो) V3 राम (for राजा) —[d]) Ñ2 V B D10 G1–3 M1 4 पुरोगम (for पुरोहित ) —For 6 Ś1 D1 3 6 7 11 13 subst

1065* सर्वं तत्रास्य राजर्षेर्हृष्टपुष्टजनाकुलम् ।
सान्तःपुरं सहामात्यं परितुष्टो नृपोत्तम ।

[(l 1) Cf 5[ab] D6 सर्वं तत्रापि, D11 सत्र तत्रस्य, D12 विश्वामित्रस्य (for सर्वं तत्रास्य) D13 -जनावृत ]

7 D3 om 7 (cf v l 6) —[a]) Ś1 D1–3 5 6 7 13 पौरैः स, Ñ2 V1 3 B1–3 D10 सामात्य , V4 समात्य , D12 सर्वैरे (for सामात्यो) D5 -सहितै D11 पौरै सामात्यसहितै , Cv cites ° as in text —[b]) M4 om (hapl ?) up to [c] in पूजित D4 M3 4 तथा (for तदा) Ś1 Ñ V B D1 3 4 5 7 10–13 सभृत्य( V2 °त्यै-र )वक( D12 om )वाहन —[c]) M1 युक्ता (sic) Ś1 V2 3 B1 Dt D2 3 7 8 12–14 T G1 परम (for परेण) —B3 reads 7[d]–9[a] in marg

8 B2 reads 8 in marg (cf. v l 7) D2 3 om. 8 D4 reads 8 after 10 —[a]) D4 पूजयेतो (s c) D6 प्रीतस्त (for पूजितो) V2 यथा, D6 तथा (for त्वया) —[b]) G1 3 च, Cm g t as in text (for सु ) Ś1 Ñ2 V1 B D1 3 6 10–13 M4 पूजनार्हेण कामत (Ñ2 V1 B D10 कामद, M4 सत्कृत ), V3 4 पूजार्हेणेह( V4 °ण च) कामद —B1 om (hapl ?) 8[cd] —[c]) Ś1 B2 D1 2 4 12 13 विद्धि वर (D13 °र ), V4 M4 विशारद (for विशारद) —After 8 B2 ins while D11 subst 1 1 for 9[ab] and then cont l 2

1066* गवां शतसहस्राणि तव दास्यामि सुव्रत ।
शबलां मे प्रयच्छस्व प्रसादं कुरु मे प्रभो ॥

—After 8 D1 reads 11[ab]

9 B2 reads 9[a] in marg (cf v l 7) D1 om 9[ad] —[a]) D3 12 गवा —[b]) B1 D5 शबला —[c]) D3 4 7 9 च (for हि) D13 पुष्प (for एतद्) —[d]) Ñ2 V B D10 11 रत्नभागी Ś1 D5 11–13 हि (for च) —[e]) V4 मा (for मे)

एवमुक्तस्तु भगवान्वसिष्ठो मुनिसत्तमः ।
विश्वामित्रेण धर्मात्मा प्रत्युवाच महीपतिम् ॥ १०
नाहं शतसहस्रेण नापि कोटिशतैर्गवाम् ।
राजन्दास्यामि शबलां राशिभी रजतस्य वा ॥ ११
न परित्यागमर्हेयं मत्सकाशादरिंदम ।
शाश्वती शबला मह्यं कीर्तिरात्मवतो यथा ॥ १२
अस्यां हव्यं च कव्यं च प्राणयात्रा तथैव च ।
आयत्तमग्निहोत्रं च बलिर्होमस्तथैव च ॥ १३

स्वाहाकारवषट्कारौ विद्याश्च विविधास्तथा ।
आयत्तमत्र राजर्षे सर्वमेतन्न संशयः ॥ १४
सर्वस्वमेतत्सत्येन मम तुष्टिकरी सदा ।
कारणैर्बहुभी राजन्न दास्ये शबलां तव ॥ १५
वसिष्ठेनैवमुक्तस्तु विश्वामित्रोऽब्रवीत्ततः ।
संरब्धतरमत्यर्थं वाक्यं वाक्यविशारदः ॥ १६
हैरण्यकक्ष्याग्रैवेयान्सुवर्णाङ्कुशभूषितान् ।
ददामि कुञ्जराणां ते सहस्राणि चतुर्दश ॥ १७  G 1 54 19 B 1. 53 18 L. 1. 48. 43

B1 °साग्ने. —$^f$) D2 माम् (for मम). D13 धर्मतो द्विजसत्तम. —After 9, B3 ins.:

1067* फलमूलाशिनस्तेपि नास्त्यस्याश्च प्रयोजनम् ।

10 $^a$) M3 (after corr. *sec. m.* as in text) भगवन्. —$^b$) D1 D6 8 मुनिपुंगवः. —$^c$) D2 विश्वामित्रोपि. —$^d$) D2 द्विजोत्तम, D2 मह्.ति (for महीपतिम्). —For 10, D11 subst.:

1068* स तथोक्तो वसिष्ठस्तु विश्वामित्रे तपःस्तुतम् ।
प्रोवाच प्रहसन्नाम तमेवं नृपसत्तमम् ।

—After 10, D2 reads 8.

11 D1 reads $11^{ab}$ after 8. —$^a$) D3 11 गवा (for नाहं). T2 कोटि- (for शत-). D1 G4 -सहस्राणि; D11 -सहस्रे.. —$^b$) D1 नाग-, D12 13 गवां; T2 M3 नाहं (for नापि). D9 शतां(sic) गवा; D11 शतेन च, D12 13 °शनि (for शतैर्गवाम्). —$^c$) T2 नाहं (for राजन्) M2 दास.. (damaged). —$^d$) G4 राशीभी (for राशिभी) Ś1 ह, Ñ2 marg., B3 4 D2.3.7 9 10 12 च, D5 13 हि (for वा) D1 (in also) रत्नानीत्रैस्तथा, D11 नापि भीताथ कस्यचित्; G1.3 M3 कोटिभिर्नैवराशिभि°.

12 $^a$) B1 om. न (submetric). G1 3 परित्यक्तुम्; Cm g परित्यागम् (as in text) —$^c$) G2 M2 शबला(M2 °ला) शाश्वती (by transp.) Ś1 Ñ2 V B D1-3 5 7 10-13 [हृ]थ मे(D13 °.) (for मह्यं). —$^d$) D14 damaged for वतो.

13 $^a$) Ś1 Ñ2 V1 3 4 B D1-3 5 7 10-13 M4 अत्र, V2 अत्र (for अस्यां). —D5 13 G1 transp. $13^b$ and $13^d$ —$^b$) V2 पानपात्र (for प्राणयात्रा) D12 13 से (for च) —B2 D1 3 om. (hapl.) $13^{cd}$. D3 7 transp. $13^{cd}$ (D5 $13^{ab}$) and $14^{ab}$. —V3 repeats $13^{cd}$ (as in D1) in place of $14^{cd}$ which is omitted. —$^c$) V2 4 अग्निर्भौत्र; V3 D1 10-12 आयत्तम्। D14 आसन्नम् (for आयत्तम्) —$^d$) D1 D3 5 7.8 10-12 M2-4 बलि (for बलिर्) V4 होमास्; B3 होम, D3 7 -कर्म; M3 (after corr *inf lin*) -होमास्. (for होमस्). —After $13^{cd}$ (r) V2 reads for the first time $24^{ab}$ repeating it in its proper place.

14 D3 7 transp. $13^{cd}$ (D5 $13^{ab}$) and $14^{ab}$. —$^a$) V1-3 B2 D2 3 7 G4 M4 वषट्कार (V2 B2 G4 M4 °रा); Ct °ट्कारौ (as in text). V4 स्वाहाकारा वषट्कारा; D2 °रो वषट्कारो. —$^b$) V3 यज्ञाश् (for विद्याश्). D14 damaged for विवि. M3 repeats (ditto.)श्च विविधास्, Ś1 D5 12 13 नृप (for तथा). T3 विद्या च विविधा तथा. —V2 om. $14^{cd}$ and repeats $13^{cd}$ in its place. —$^c$) G1 आसन्नम् (for आयत्तम्). D1 ह्यत्र, D7 यत्र; T2 3 M3 अस्या (for अत्र). Ś1 Ñ2 V1 4 B D1 आयत्ता ह्य(V2 B2 4 य)त्र; V3 आयत्तु यत्र (sic), D2 आयत्तो देवा; D6 10-13 आयत्ता ह्यत्र (D11 यत्र). —$^d$) Ñ2 V2 B D10 11 सर्वे एते न; V1 2 सर्वत्र तेन; D7 °मन्यत्र (for सर्वमेतन्न) Ś1 D1-3 5 12 13 सर्वमन्यद्(D3 °त्र)संशयं. M4 सर्वमेतद्संशय.

15 $^a$) Ś1 एव, D6 एवं (for एतत्) Ś1 D1 5 6 7 11-13 M4 सत्य ते (M4 वै); Cg as in text (for सत्येन) Ñ2 V B D10 सर्वमेतद्धि सत्य ते, D2 सर्वासामेव सत्य ते —$^b$) V1 damaged Ś1 V2-4 B D2 3 5 7 10-13 पुष्टिकर(B4 °रः), Ñ2 D1 M3 तुष्टिकर, D1 D5 6 8 12 13 Ct तथा; T2 M4 (after corr *inf. lin.* as in text) तदा (for सदा). —Ś1 D1-3 5 7 12 13 om. $15^{cd}$ —$^c$) V2 कारणैर् (sic) (for कारणैर्). —$^d$) Ñ2 V2-4 B D10 नंदिनीं (for शबलां) D11 इमां (for तव) V1 दास्ये नंदिनात (corrupt).

16 $^b$) Ñ2 V B D10 T2 G1 3 M1 4 वच, D1 D6 8 तदा (for ततः) —$^c$) Ś1 सरभतरम्; B4 सरब्ध मुनिर्, D2 गिरा सरब्धम्; D3 सरब्धतया तरम् (sic) (for सरब्धतरम्). V1 damaged from र्थं in अत्यर्थं up to $^d$. D1 इत्यर्थं, D11 मधुरम् (for अत्यर्थं). M4 सरब्धमत्यर्थंतर —$^d$) Ś1 D1 2 3 12 निदर्शं वच; B2 D3 11 T3 विशारद (for विशारदः)

17 $^a$) Ś1 T2 3 M1 3 4 -कक्ष्यान्; D1 M2 -कक्ष्य-; D1 -कक्षा, D3 12 -कक्षान्, D6 8 -कक्ष, Cv r m as in text (for कक्ष्या) Ñ2 V1-3 B2 D12 सुवर्णकक्षा (V1 °क्ष); V4 B1 3 4 D10 सुवर्णकक्षान्; D1-3 7 9 11 हिरण्यकक्षान् (D1 °क्ष्य-) —$^b$) Ś1 D5 11-13 सर्वाभरण (for सुवर्णाङ्कुश-). Ñ2 V B D10 T1 भूषणान्, D1-3 7 स्वर्णाङ्कुशविभूषितान्. —D11 om. (hapl.) $17^c$-$18^b$. —$^c$) B1 M4 ददानि, D1 T3

Ś 1 54 20 B 1 53 18 L 1 48 44

हैरण्यानां रथानां च श्वेताश्वानां चतुर्युजाम् ।
ददामि ते शतान्यष्टौ किङ्किणीकविभूषितान् ॥ १८
हयानां देशजातानां कुलजानां महौजसाम् ।
सहस्रमेकं दश च ददामि तव सुव्रत ॥ १९
नानावर्णविभक्तानां वयःस्थानां तथैव च ।
ददाम्येकां गवां कोटिं शबला दीयतां मम ॥ २०
एवमुक्तस्तु भगवान्विश्वामित्रेण धीमता ।
न दास्यामीति शबलां प्राह राजन्कथंचन ॥ २१
एतदेव हि मे रत्नमेतदेव हि मे धनम् ।
एतदेव हि सर्वस्वमेतदेव हि जीवितम् ॥ २२
दर्शश्च पूर्णमासश्च यज्ञाश्चैवाप्तदक्षिणाः ।
एतदेव हि मे राजन्विविधाश्च क्रियास्तथा ॥ २३
अदोमूलाः क्रियाः सर्वा मम राजन्न संशयः ।
बहुना किं प्रलापेन न दास्ये कामदोहिनीम् ॥ २४

इति श्रीरामायणे बालकाण्डे द्विपञ्चाशः सर्गः ॥५२॥

दास्यामि G1 च (for ते) Ś1 D1-3.5.7.12.13 कुंजरास्तुर्ये, Ñ3 V B D10 कुञ्जरास्तेह (V2 °पां) —T3 lacuna for d

18 D11 om 18ab (cf v l 17) V3 partially damaged for 18ab —a) V2 हयस्यानां (sic) V3.4 B1 D2.3 हिरण्यानां Ś1 D1.2.5.7.12.13 रथाश्वानां D4.6 T1-3 G1.2 M1-4 रथानां ते D1 हिरण्यानां (gloss हिरण्यवर्णानां) रथानां —b) Ś1 Ñ2 V1-4 B1-4 D1-3.5.7.12.13 श्वेतानां च (Ñ2 V2.4 B1.2.4 D12 वै) (for श्वेताश्वानां) V4 B4 G3 चतुर्भुजा, D2.4 (after corr as in text) चतुर्युतां, D6 चतुर्दश, Cv r m g t °र्युजा (as in text) —c) V1 B1.3 M4 ददानि, D6 दास्यामि, D11 ह्रासयमि (corrupt) Ñ3 B3 D10 च, B4 om (submetric) (for ते) D6 [अ]ष्ट (for [अ]ष्टौ) Ś1 D1.3.5.7.12.13 स्वर्णैरुपशतानां —d) Ś1 D1.3.5.7.11.13 किंकिणीजालमालिनः (D11 °नीं), Ñ2 V B D10 किंकिणाजालशोभिना (V2 °शोभिना), D6 M4 किंकिणीकरि (M4 °शत) भूषितान् (D6 °तां), Cm t as in text, Cg °कैविभूषितान्

19 a) B3 D6 दशजातानां, D1 (gloss) गत्वा:रसिंधुमद्रकैकयवनुरक्तादय —b) B1 उत्तमाना, B4 om D6 कांबोजानां (for कुलजानां) T2 M3 कथैव च (for महौजसाम्) —c) V4 दास्या च (sic before corr °मि) (for दश च) —D3 मेकं दश च repeated (ditto) —d) V2 B1.2 M4 ददानि, D4 T3 दास्यामि, G1 ददाहि (sic)

20 a) Ś1 D1.2.5.7.13 विरक्ता (D2 °क्ता)नां D11 विचित्राणां, D11 T1 G3 [अ]भियुक्तानां G1 सुवर्णानां, Cg t as in text (for विभक्तानां) ☞ Ñ1 resumes from तथैव च in b (cf v l 1) —b) V4 रूप स्थानां D3 ववस्थानां (metathesis) D6 धनकोटि T2 वयस्थानौ (sic) —c) B1.3 M4 ददाम्येकां (M1 °कं) D11 damaged for दाम्ये T2 M3 ददामि ते (for ददाम्येकां) —d) Ś1 Ñ V B D1-3.5.7.10-13 G1 M4 transp शबला and दीयतां D1 इमा (for मम) —After 20 Dt D1.3.5.6.7.14 S Cg t ins

1069* यावद्रिक्तानि रत्नं वा हिरण्यं वा द्विजोत्तम ।
तावद्दामि तत्सर्वं शबला दीयतां मम ।

[(l 1) Dt D1.3 रत्नानि, M4 रत्नस्य (for रत्नं वा) T3 M4 सुवर्णं (for हिरण्यं) M4 हिरण्यस्य च सत्तम (for the post half) —(l 2) G2.3 M1.3 दास्यामि (for ददामि) Dt D1.3 G1.2 M1-3 (after corr sec m before corr as above) वै (for तत्) M4 ददानि ते मुनिश्रेष्ठ (for the prior half) Post half = 20d Dt D1.3 M4 दीयतां शबला (by transp)]

21 a) D11 damaged for स्तु भग Ñ V B D10 तु (for स्तु) M3 (after corr sec m as in text) भगवन् —c) T2 ददामि (for दास्यामि) G1 [इ]ह, G3 r m as in text (for [इ]ति) —For 21cd, Ś1 Ñ V B D1-3.5.7.10-13 subst

1070* नैव (D7 न च) दास्यामि शबलामिति राजानमब्रवीत् ।

22 B1 D11.13 om (hapl) 22ab —a) B4 om (hapl) from ह in a up to the second मे in b D6 om (hapl) रत्नमे Ś1 D1 धर्मम् (for रत्नम्) —D1.5.7.11 om (hapl) 22bc —b) Ñ2 illeg from त up to मे V3.4 बलं (for धनम्) —D11 damaged for मेत in सर्वस्वमेतद् —c) Ñ1 reads from हि up to दच in marg Ś1 B2 D5.12.13 G1 M1.2 मे सर्वम् (for सर्वस्वम्) —d) Ñ2 [अ]पि (for हि) —After 22 M4 ins

1071* धर्मेणोपात्तमेतद्धि मम नास्त्यत्र संशयम् (य:) ।
देवकृत्ये च पित्र्ये च अतिथीनां च पूजने ।
सर्वकामदुहा मह्यं शबला जीवितप्रिया ।

[(l 2) Note hiatus between the two halves ]

23 a) M4 first च inf lin sec m Ś1 N V B Dt D1.6.10.12.13 T1.2 पौर्णमासश्च (Ś1 D12 °सीश्च), D11 M4 पू(D11 पौ)र्णमासाश्च —b) D5.10.12.13 यज्ञश्च (for यज्ञाश्च) Dt [ए]व स , D3 [अ]वाप्त (for [ए]वाप्त) D5.10.12.13 दक्षिण B4 [अ]थ(प)यज्ञाश्चाप्तदक्षिणा —c) D6 एतद- B2 राजश्रे (by transp) —d) M1 तथा क्रिया (by transp) Ś1 Ñ V B D1-3.5.7.10.13 क्रियाश्च विविधास्तथा (by transp)

24 V2 reads 24ab for the first time after 13cd (r) repeating it here —a) Ś1 N V (V2 first time) B

# ५३

कामधेनुं वसिष्ठोऽपि यदा न त्यजते मुनिः ।
तदास्य शबलां राम विश्वामित्रोऽन्वकर्षत ॥ १
नीयमाना तु शबला राम राज्ञा महात्मना ।
दुःखिता चिन्तयामास रुदन्ती शोककर्शिता ॥ २
परित्यक्ता वसिष्ठेन किमहं सुमहात्मना ।
याहं राजभृतैर्दीना ह्रियेयं भृशदुःखिता ॥ ३
किं मयापकृतं तस्य महर्षेर्भावितात्मनः ।
यन्मामनागसं भक्तामिष्टां त्यजति धार्मिकः ॥ ४
इति सा चिन्तयित्वा तु निःश्वस्य च पुनः पुनः ।
जगाम वेगेन तदा वसिष्ठं परमौजसम् ॥ ५
निर्धूय तांस्तदा भृत्याञ्शतशः शत्रुसूदन ।
जगामानिलवेगेन पादमूलं महात्मनः ॥ ६ G 1 55 6 B 1 54 6 L 1 49 6

D1 4 5 9-11 13 T3 G1 घृतन्मूला, Dt D8 T2 G1 2 M2 3 Ct मत्तोमूला, D4.12 घृतस्पूर्णा, Cm.g k अह्नो° (as in text) V2 (second time) घृतन्मूलाश्च ता सर्वा, M4 सर्वसान्मे पता वैषा —b) M4 सर्वकाल (for मम राजन्) —D6 12.13 om while Ś1 reads in marg 24cd —c) Dt D6 बहुना (sic) D1 बहुधा (for बहुना) —d) D3 द्वास्येम (sic) (for दास्ये) Ñ V1 2.3 B1-3 D10 दोहना, B4 न्दौहिनीं, D9 G1 M2 (G1 M2 after corr inf lin as in text) -मोहिनीं, Cm g k t as in text (for दोहिनीम्) D11 दास्ये न नंदिनीं ब्रह्

Colophon Kanda name Ñ2 V1 D1 4 13 om V3 4 B D11 आदि°, D3 अयोध्या° —After Kanda name B4 ins बालचरिते —Sarga name Ś1 D6 11 13 धेनुप्रभाषो (D11 °याचने), Ñ V3 B1 4 D10 शतानन्दवाक्ये (Ñ1 V3 B1 °दोपाख्याने) वसिष्ठविश्वामित्र (B4 transp वसिष्ठ and विश्वामित्र) संवाद, V1 विश्वामित्रसंवाद, V4 B3 वसिष्ठविश्वामित्रसंवाद, V4 शतानन्दोपाख्याने विश्वामित्रसंवाद, D1 3 7 9 धेनुप्रयाचनो (D2 °न) —Sarga no (figures words or both) Ś1 Ñ2 V1 2 4 B1 4 D3 4 13 om Ñ1 B3 3 D10 54 V2 D9 56 V3 Dt D4 8 9 12 14 S (except M4) 53 D1 7 41 D5 39 M4 52 (as in text) D12 इत्यार्षे रा—यणे—काड—मित्र—धनु—नाम 53 —After colophon T1 concludes with श्रीरामचन्द्राय नम, G1 2 4 M2 श्रीरामाय नम, G3 श्रीमते रामानुजाय नम

## 53

1 ab) B1 काम धेनु Ś1 D1 3 5 7 12.13 G1 3 M1 द्विः Ñ V B D10 11 (s)सौ (for ऽपि) Cm k t न त्यजते (as in text) Ś1 Ñ V B D1-3 5 7 10-13 न (B3 marg) त (D5 या [sic]) त्याग पत्र (V3 D3 महा) मुनि (for b) M4 यथा वसिष्ठश्च धेनु न ददौ कामदोहिनीं —c) Ś1 Ñ V B D1-3 7 11 13 ततोस्य, D5 तदा स, D3 तथास्य (for तदास्य) T1 G M1 3 शबला Ś1 Ñ V B D1-3 5 7 11-13 राजा, D11 राजन् (for राम) M4 तदा तस्य बलाद्राजा —d) Ś1 Ñ V B D1 3 5 7 10-13 तदा (V3 °तो) हरद, M4 (s)पकर्षति, Cm k t as in text (for न्वकर्षत)

2 a) D1 ह्रियमाना, D10 नीयमाना (for नीयमाना) D10 शबला, T1 2 G M1 3 शबला —b) B1 यदा राम (for राम राज्ञा) Ś1 B4 (marg also) D1 3 5 7 11 13 बलीयसा (for महात्मना) —c) Ñ V B D1-3,7 10-13 M4 ध्यायती (for दुःखिता) Ś1 D5 ध्यायन्ति चिंतयामास —d) Ñ2 V2 B1-3 Dt D5 8 12 T2 G1 3 M2 3 रुदती (for रुदन्ती) Ñ V B D10 13 विह्वला (for -कर्शिता)

3 a) B3 °समस्ता, D5 °शक्ता (for °त्यक्ता) —b) V4 अर्थं, M4 इदं (for अहं) D1 ह्रिये परमदुःखिता (cf d in Ś1 etc.) D3 किं *** महामना —c) D1 अहं (for याहं) V2 D3 14 T1 M2 Cm tp °भटैर्, V3 °दूतैर्, D1 राज्ञो भृत्यैर्, G1 °हृता, M3 °बलैर्, Ck t as in text (for राजभृतैर्) G4 damaged for दीना Ś1 V1 D3 12 13 या (D12 13 सा) ह स्थला (V1 D11 दीना) राजभृत्यैर् —d) Dt D8 Ct ह्रियेय, D9 हृद्ये, M4 नयामि (for ह्रियेय) Ś1 Ñ V B D2 3 5 7 10-12 ह्रिये (Ñ2 V1 D7 4 क्रिये, V3 हृद्ये [hypermetric]) परमदुःखिता, T3 G1 3 बद्धा पाशैः सुपीडिता

4 V1 lacuna from स्य up to तद् —a) V3 मयापकृत्य, B3 D5 10 मयापहृते, D11 ***कृत (for °कृतं) V1 तत्र V2 चैव, V4 B2 कर्म (for तस्य) —cd) G2 M1 किं (for यन्) V3 3 B3 D3 M3 4 °गसा, D1 अनागसस्, T2 G2 3 M3 3 अनागसी (for अनागसम्) Ś1 D5 12 13 साध्वीं, Ñ V1 ह्रिष्टा, V2 निष्टा, V3 B2 2 स्निग्धा V4 D10 क्लिष्टा, B3 4 D2 क्रिष्टा (sic), Dt D4 8 G1 3 दृष्ट्वा, D1 7 त्विष्टा D3 विष्टा (sic) D11 क्लिष्टा, Cm t as in text (for भक्ताम्) Ś1 Ñ V B Dt D1 3 5-8 10-13 G1 3 भक्ता (for इष्टा) M4 इष्टा भक्ता (by transp) D3 त्यजसि D4 8 12 धार्मिक, D9 (after corr as in text) धार्मिका

5 Cm g k t seem to have om 5 —a) V2 स (sic) V2 B3 4 Dt D3 8 T1 G M3 स (for सा) Ś1 V4 B3 D1 3 7 च, V3 [अ]थ (for तु) —b) B1 °स्य तु, D3 T G1 M3 विनि श्वस्य (for निःश्वस्य च) G1 3 M1 मुहुर्मुहु —d) D1 अमितौजसं, M2 च महौजसं, M4 परमं मुनि (for परमौजसम्) —For 5cd, Ś1 Ñ V B D1 3 5 7 10-13 subst

1072* प्रययौ साथ वेगेन वसिष्ठं प्रति राघव।
[B4 साधु D3 सा च (for साथ)]

6 a) Ś1 D4 8 5 11 12 विधूय, V1 नधूय (sic), V4 निर्ध्याय, D1 विद्राव्य (for निर्धूय) Ś1 Ñ V1 2.4 B

